# ॥ श्री महालक्ष्मी स्तोत्रम् ॥
## विष्णु पुराण

श्री गणेशाय नमः

सिंहासनगतः शक्रः संप्राप्यः त्रिदिवं पुनः ।
देवराज्ये स्थितो देवीं तुष्टवाब्जकरं ततः ॥ १ ॥

इंद्र उवाच

नमस्तस्यै सर्वभूतानां जननीं अब्ज संभवाम् ।
श्रियं मुनींद्र पद्माक्षीं विष्णु वक्षस्थलः स्थिताम् ॥ २ ॥

पद्मालयां पद्मकरां पद्मपत्र निभेक्षणाम् ।
वंदे पद्ममुखीं देवीं पद्मनाभप्रियां अहम् ॥ ३ ॥

त्वं सिद्धिः त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी ।
संध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती ॥ ४ ॥

यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्ति फलदायिनी ॥ ५ ॥

आन्वीक्षिकी त्रयीवार्ता दंडनीतिः त्वमेव च ।
सौम्यासौम्येः जगद्रूपैः त्वैतत् देवि पूरितम् ॥ ६ ॥

का त्वन्या त्वमृते देवि सर्वयज्ञमयं वपुः ।
अध्यास्ते देवदेवस्य योगचिंत्यं गदाभृतः ॥ ७ ॥

त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ।
विनष्टप्रायं अभवत्त्वयेदानीं समेधितम् ॥ ८ ॥

दाराः पुत्राः तथा आगारं सुहृद् धान्य धन आदिकम् ।
भवत्येतन् महाभागे नित्यं त्वत् वीक्षणान् नृणाम् ॥ ९ ॥

शरीर आरोग्यं ऐश्वर्यं अरिपक्षक्षयः सुखम् ।
देवि त्वत् दृष्टि दृष्टानां पुरुषाणां न दुर्लभम् ॥ १० ॥

त्वं अंबा सर्वभूतानां देवेदेवो हरिः पिता ।
त्वयैतत् विष्णुना च अंब जगत् व्याप्तं चराचरम् ॥ ११ ॥

मनःकोशः तथा गोष्ठं मा गृहं मा परिच्छदम् ।
मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ १२ ॥

मा पुत्रान्मा सुहृद् वर्गान्मा पशून्मा विभूषणम् ।
त्यजेथा मम देवस्य विष्णोर्वक्षः स्थलाश्रये ॥ १३ ॥

सत्त्वेन सत्य शौचाभ्यां तथा शीलादिभिः गुणैः ।
त्यज्यंते ते नराः सद्यः संत्यक्ता ये त्वयाऽमले ॥ १४ ॥

त्वया अवलोकिताः सद्यः शीलाद्यैरखिलैः गुणैः ।
कुलैश्वर्यैश्च पूज्यंते पुरुषा निर्गुणा अपि ॥ १५ ॥

सश्लाघ्यः सगुणी धन्यः स कुलीनः स बुद्धिमान् ।
स शूरः सचविक्रांतो यस्त्वया देवि वीक्षितः ॥ १६ ॥

सद्योवैगुण्यमायांति शीलाद्याः सकला गुणाः ।
परांगमुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १७ ॥

न ते वर्णयितुं शक्तागुणान् जिव्हा अपि वेधसः ।
प्रसीद देवि पद्माक्षि माऽस्मांत्याक्षीः कदाचनः ॥ १८ ॥

श्री पराशर उवाच

एवं श्रीः संस्तुता सम्यक् प्राह हृष्टा शतक्रतुम् ।
श्रुण्वतां सर्वदेवानां सर्वभूतस्थिता द्विज ॥ १९ ॥

श्रीः उवाच

परितुष्टास्मि देवेश स्तोत्रेणानेन ते हरेः ।
वरं वृष्णीव यस्त्विष्टो वरदाऽहं तवागता ॥ २० ॥

इंद्र उवाच

वरदा यदिमेदेवि वरार्हो यदिवाऽप्यहम् ।
त्रैलोक्यं न त्वया त्याज्यमेष मेऽस्तु वरः परः ॥ २१ ॥

स्तोत्रेण यस्तवैवेन त्वां स्तोष्यत्यब्धि संभवे ।
स त्वया न परित्याज्यो द्वितीयोऽस्तुवरो मम ॥ २२ ॥

श्रीः उवाच

त्रैलोक्यं त्रिदशश्रेष्ठ न संत्यक्ष्यामि वासव ।
दत्तो वरो मयाऽयं ते स्तोत्राराधन तुष्ट्या ॥ २३ ॥

यश्च सायं तथा प्रातः स्तोत्रेणानेन मानवः ।
स्तोष्यते चेन्न तस्याहं भविष्यामि परांगमुखी ॥ २४ ॥

श्री पाराशर उवाच

एवं वरं ददौ देवी देवराजाय वै पुरा ।
मैत्रेय श्रीः महाभागा स्तोत्राराधन तोषिता ॥ २५ ॥

भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः पुनः ।
देव दानव यत्नेन प्रसूता अमृत मंथने ॥ २६ ॥

एवं यदा जगत्स्वामी देवराजो जनार्दनः ।
अवतारः करोत्येषा तदा श्रीः तत् सहायिनी ॥ २७ ॥

पुनश्चपद्मा संभूता यदा आदित्योऽभवद्धरिः ।
यदा च भार्गवो रामः तदा भूद्धरणीत्वियम् ॥ २८ ॥

रामत्त्वेचाभवत्सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु च अवतारेषु विष्णोरेखा अनपायिनी ॥ ३० ॥

यश्चैत शृणुयाज्जन्म लक्ष्म्या यश्च पठेन्नरः ।
श्रियो न विच्युतिः तस्य गृहे यावत् कुलत्रयम् ॥ ३१ ॥

पठ्यते येषु चैवर्षे गृहेषु श्रीस्तवं मुने ।
अलक्ष्मीः कलहाधारा न तेष्वास्ते कदाचन ॥ ३२ ॥

एतत्ते कथितं ब्रह्मन्यन्मां त्वं परिपृच्छसि ।
क्षीराब्धौ श्रीर्यथा जाता पूर्वं भृगुसुता सती ॥ ३३ ॥

इति सकल विभूत्य वाप्तिहेतुः स्तुतिरियं इंद्रमुखोद्गता हि लक्ष्म्याः ।
अनुदिनं इह पठ्यते नृभियैर्वसति न तेषु कदाचिदप्यलक्ष्मीः ॥ ३४ ॥

॥ इति श्री विष्णु पुराणे महालक्ष्मी स्तोत्रं संपूर्णम् ॥